वाच्यम् ? अज्ञानकार्य्यस्यापि अज्ञानानतिरेकात् तदभावे तत्सत्त्वानुपलम्भात् नच अत्र प्रमाणाभावः ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

इति श्रुतेः । नच एतद्वाक्यमशुभकर्मनिवृत्तिपरमेव इति वाच्यं ? कर्मशब्दस्य शुभाशुभसाधारणत्वात् विद्यासामर्थ्यस्य च उभयत्र तुल्यत्वात् ।

ब्रह्मात्मैकत्वविज्ञानं शाब्दं देशिकपूर्वकम् ।
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥

इत्यत्र बुद्धिपूर्वकृतपापस्यापि ब्रह्मज्ञानेन दाहस्मरणात् ।

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ! ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥

इत्यत्र सर्वशब्देन अशेषपुण्यपापे गृहीत्वा तस्य सर्वस्यैव ज्ञानाग्निना दाहस्य भगवतापि उक्तत्वाच्च । किञ्च यस्य दर्शनमात्रात् मन्ये-

परिहरति न च इत्यादिना । पूर्वपदाम्पुपम इरति तस्मादिति । तत्त्वज्ञानस्य अज्ञानवत् कर्मभिरपि विरोधस्य अविशेषात्

षामपि पापचयो जायते का कथा तस्य ब्रह्मी-
भूतस्य पापचये तदाह भगवान् वसिष्ठः।

यस्यानुभवपर्य्यन्तं तत्त्वे बुद्धिः प्रवर्त्तते।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः॥

तथाच कुलपावित्र्यहेतुत्वमपि ब्रह्मविदः स्मर्य्यते।

कुलं पवित्रं जननी कृतार्था
विश्वम्भरा पुण्यवती च तेन।
अपारसंवित्सुखसागरेऽस्मिन्
लीनं परे ब्रह्मणि यस्य चेतः॥

तस्मात् यथोक्तब्रह्मात्मैकत्वविज्ञानेन कृत-
कृत्यो भवतीति न अत्र विवदितव्यम् इति।

प्रकाशानन्दयतिना कृतिना स्वात्मशुद्धये।
सिद्धान्तमुक्तावल्येषा रचिता रन्ध्रवर्जिता॥
अद्वैतानन्दसन्दोहा सत्यज्ञानादिलक्षणा।
नारायणसमासक्ता श्रिया सापत्न्यदूषिता॥
शृणु प्रकाशरचितां सद्वैततिमिरापहाम्।
वादीभकुम्भनिर्भेदे सिंहदंष्ट्राधरीकृताम्

-

धर्माधर्मरूप कर्माणि तेन निवर्त्तते इति श्रुतिस्मृतियुक्ति-
सिद्धत्वादिति परिहरति। नैवमित्यादिना। स्पष्टार्थो ग्रन्थः।

वेदान्तसारसर्वस्वमज्ञेयमधुनातनैः ।
अशेषेण मयोक्तं तत्पुरुषोत्तमयत्नतः ॥
स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्ताऽवनिः
यज्ञानां च कृतं सहस्रमखिला देवाश्च सम्पूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीज्ञानानन्दपूज्यपादशिष्य श्रीप्रकाशानन्दविरचिता वेदान्तसिद्धान्तमुक्तावली समाप्ता ।

उक्तयुक्त्या आत्मज्ञानात् कृतकृत्यतासम्पत्तेरिति ग्रन्थमुपसंहरति तस्मादिति ।

इतिशब्दो ग्रन्थसमाप्तौ । एवं ग्रन्थस्य अवान्तरप्रयोजनमाह स्मृणु प्रकाशेति । तादृक् विद्वद्भिः अधरीकृता यया इत्यर्थः । एतेन वादिविजयार्थिभिरपि इयमभ्यसनीयेति भावः ।

इति श्रीपण्डितकुलपतिना बि ए उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण प्राचीनां
व्याख्यामवलम्ब्य सङ्कलिता विस्तृत
व्याख्या समाप्ता ।